॥ उज्ज्वलवेङ्कटनाथस्तोत्रम् ॥

रङ्गे तुङ्गे कवेराचलजकनकनद्यन्तरङ्गे भुजङ्गे
शेषे शेषे विचिन्वन् जगदवननयं भात्यशेषेऽपि दोषे ।
निद्रामुद्रां दधानो निखिलजनगुणध्यानसान्द्रामतन्द्रां
चिन्तां यां तां वृषाद्रौ विरचयसि रमाकान्त कान्तां शुभान्ताम् ॥ १॥

तां चिन्तां रङ्गक्लृप्तां वृषगिरिशिखरे सार्थयन् रङ्गनाथ
श्रीवत्सं वा विभूषां व्रणकिणमहिराट्सूरिक्लृप्तापराधम् ।
धृत्वा वात्सल्यमत्युज्ज्वलयितुमवने सत्क्रतौ बद्धदीक्षो
बध्नन्स्वीयाङ्घ्रियूपे निखिलनरपशून् गौणरज्ज्वाऽसि यज्वा ॥ २॥

ज्वालारावप्रनष्टासुरनिवहमहाश्रीरथाङ्गाब्जहस्तं
श्रीरङ्गे चिन्तितार्थान्निजजनविषये योक्तुकामं तदर्हान् ।
द्रष्टुं दृष्ट्या समन्ताज्जगति वृषगिरेस्तुङ्गशृङ्गाधिरूढं
दुष्टादुष्टानवन्तं निरुपधिकृपया श्रीनिवासं भजेऽन्तः ॥ ३॥

अन्तः कान्तश्श्रियो नस्सकरुणविलसद्वृत्तरङ्गैरपाङ्गैः
सिञ्चन्मुञ्चन्कृपाम्भःकणगणभरितान्प्रेमपूरानपारान् ।
रूपं चापादचूडं विशदमुपनयन् पङ्कजाक्षं समक्षं
धत्तां हृत्तापशान्त्यै शिशिरमृदुलतानिर्जिताब्जे पदाब्जे ॥ ४॥

अब्जेन सदृशि सन्ततमिन्धे हृत्पुण्डरीककुण्डे यः ।
जडिमार्त आश्रयेऽद्भुतपावकमेतं निरिन्धनं ज्वलितम् ॥ ५॥

ज्वलितनानानागशृङ्गगमणिगणोदितसुपरभागक
घननिभाभाभासुराङ्गक वृषगिरीश्वर वितर शं मम
सुजनतातातायिताखिलहितसुशीतलगुणगणालय
विसृमरारारादुदित्वररिपुभयङ्करकरसुदर्शन ।
सकलपापापारभीकरघनरवाकरसुदर सादरम्
अवतु मामामाघसम्भृतमगणनोचितगुण रमेश्वर
तव कृपा पापाटवीहतिदवहुताशनसमहिमा ध्रुवम्
इतरथाथाथारमस्त्यघगणविमोचनमिह न किञ्चन ॥ ६॥

नगधरारााराधने तव वृषगिरीश्वर य इह सादर-
रचितनानानामकौसुमतरुलसन्निजवनविभागज-
सुमकृतां तां तां शुभस्रजमुपहरन् सुखमहिपतिर्गुरुः
अतिरयायायासदायकभवभयानकशठरिपोः किल ।

निगमगा गा गायता यतिपरिबृढेन तु रचय पूरुष
जितसभो भो भोगिराङ्गिरिपतिपदार्चनमिति नियोजितः
इह परं रंरम्यते स्म च तदुदितव्रणचुबुकभूषणे
इह रमे मे मेघरोचिषि भवति हारिणि हृदयरङ्गग ॥ ७॥

गतभये ये ये पदे तव रुचियुता भुवि वृषगिरीश्वर
विदधते ते ते पदार्चनमितरथा गतिविरहिता इति
मतिमता तातायिते त्वयि शरणतां हृदि कलयता परि-
चरणया यायाऽऽयता तव फणिगणाधिपगुरुवरेण तु ।
विरचितां तांतां वनावलिमुपगते त्वयि विहरति द्रुम-
नहनगाङ्गां गामिव श्रियमरचयत्तव स गुरुरस्य च
तदनु तान्तां तां रमां परिजनगिरा द्रुतमवयतो निज-
शिशुदशाशाशालिनीमपि वितरतो वर वितर शं मम ॥ ८॥

ममतया यायाऽऽविला मतिरुदयते मम सपदि तां हर
करुणया याया शुभा मम वितर तामयि वृषगिरीश्वर
सदुदयायायासमृच्छसि न दरमप्यरिविदलनादिषु
मदुदयायायासमीप्ससि न तु कथं मम रिपुजयाय च ।
मयि दयाया यासि केन तु न पदतां ननु निगद तन्मम
मम विभो भो भोगिनायकशयन मे मतमरिजयं दिश
परम याया या दया तव निरवधिं मयि झटिति तामयि
सुमहिमा मा माधव क्षतिमुपगमत्तव मम कृतेऽनघ ॥ ९॥

घटितपापापारदुर्भटपटलदुर्घटनिधनकारण
रणधरारारात्पलायननिजनिदर्शितबहुबलायन
दरवरारारावनाशन मधुविनाशन मम मनोधन
रिपुलयायायाहि पाहि न इदमरं मम कलय पावन ।
सुतरसासासारदृक्ततिरतिशुभा तव निपततान्मयि
सहरमो मोमोत्तु सन्ततमयि भवान्मयि वृषगिरावपि
प्रतिदिनं नंनम्यते मम मन उपेक्षिततदपरं त्वयि
तदरिपापापासनं कुरु वृषगिरीश्वर सततमुज्ज्वल ॥ १०॥

उज्ज्वलवेङ्कटनाथस्तोत्रं पठतां ध्रुवाऽरिविजयश्रीः
श्रीरङ्गोक्तं लसति यदमृतं सारज्ञहृदयसारङ्गे ॥ ११॥

॥ इति उज्ज्वलवेङ्कटनाथस्तोत्रं संपूर्णम् ॥